च समानाधिकरणपदं तात्पर्यग्राहकं सा समानाधिकरणविषया । मुख्यार्थबाधकं तात्पर्यग्राहकं, तदेव लक्षणाग्राहकमित्युच्यते ॥

पुनः प्रकारान्तरेण अस्याः द्वैविध्यम्

पुनरपि गौणी शुद्धा चेत्येषा द्विविधा । सादृश्यसम्बन्धे सति गौणी, तद्भिन्नसम्बन्धे सति शुद्धा । सम्बन्धश्चानेकविधः ॥

तत्र गूढा फलवती जहल्लक्षणा

सम्प्रदायक्रमेणोदाहरणानि । 'गङ्गायां-घोषः' इत्यत्र गङ्गाशब्देन तत्तीरे त्वधिकरणविषया फलवती जहल्लक्षणा । घोषपदं तात्पर्यग्राहकम् । फलं तु शैत्यपावनत्वप्रतीतिः । केचित्तु तीरसमीपकः[1] आधारसप्तम्यर्थ इत्याहुः । एवं "द्वैतवने युधिष्ठिरं समाययौ" इत्यत्र सरोविशेषवाचिना द्वैतवनशब्देन तत्तीरे व्यधिकरणविषया फलवती जहल्लक्षणा । युधिष्ठिरसमागमः तात्पर्य-

नाम् पदानां भिन्नार्थकत्वं वैयधिकरण्यम् । एकविभक्त्यन्तानां पदानां एकार्थनिष्ठत्वं सामानाधिकरण्यम् इति मञ्जूषायाम् ॥

तद्भिन्नसम्बन्धे—कार्यकारणभावादिसंम्बन्धे इत्यर्थः । सम्प्रदायेति । आलङ्कारिकलक्षणशास्त्रप्रवर्तकानां सम्प्रदायक्रमेणेत्यर्थः । घोषः आभीरपल्ली । गोपालकानां ग्रामः इति यावत् । केचित्त्विति । वैया-

[1] समीपकाधारः-ग.

ग्राहकः । फलं तु विविक्तताप्रतीतिः । “यत्र द्वैतवने सरः” इति भारतोक्तेः । केचित्तु द्वैतवने निरूढा लक्षणेत्याहुः । तथाचोक्तं भारते–

येन लिङ्गेन यो देशो
युक्तः समभिलक्ष्यते ।
तेनैव नाम्ना तं देशं
वाच्यमाहुर्मनीषिणः । इति ॥

निरूढलक्षणायाः शक्तितुल्यत्वाद्वाच्यमित्युक्तम् । काव्यप्रदीपे च–

यन्नाम्ना यत्र चैत्यादि-
र्विषयोऽपि स तादृशः ॥ इति ॥

फलवती अजहल्लक्षणा

“छत्रिणो यान्ति” इत्यत्र छत्रधारिवाचिना छत्रिशब्देन तत्सहचरेष्वच्छत्रिष्वपि व्यधिकरणविषया फलवत्यजहल्लक्षणा । बहुत्वं तात्पर्यग्राहकम् । फलं तु छत्रिमुख्यत्वप्रतीतिः ।

---

करणास्तु इत्यर्थः । द्वैतवने इति । “स वर्णिलिङ्गी विदितः समाययौ युधिष्ठिरं द्वैतवने वनेचरः ।” इति किरातार्जुनीये ॥

येन लिङ्गेन = येन चिह्नेनेत्यर्थः । तेनैव–तच्चिह्नवाचिशब्देनैवेत्यर्थः । भारतोक्तेरिति । वनपर्वणीति शेषः । भारते इति । आदिपर्वणीति शेषः । इत्युक्तमिति । अत एव तस्मिन् महाभारतपद्येऽपि वाच्यशब्द एव प्रयुक्त इति भावः ॥

'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र काकशब्देन दध्युपघातकमात्रे फलवत्यजहल्लक्षणा। फलं तु काकपदेन दुष्टताप्रतीतिः। 'राजा गच्छति' इत्यत्र राजशब्देन गजतुरगादिषु फलवती अजहल्लक्षणा। फलं तु राजप्रसिद्धिप्रतीतिः। "धनुर्भृतः संयति लब्धकीर्तयः" इत्यत्र धनुश्शब्देन आयुधसामान्ये फलवत्यजहल्लक्षणा। एवं ब्राह्मणग्रामादिष्वपि द्रष्टव्यम् ॥

फलवती जहदजहल्लक्षणा

अथ फलवती जहदजहल्लक्षणा। इयमेव भागत्यागलक्षणेत्याहुः। 'पशूननक्ति' इत्यत्र पशुशब्देन तन्नेत्रेषु फलवती जहदजहल्लक्षणा। फलं तु सकलतदात्मसंस्कारप्रतीतिः। एवं 'व्रीहीन् प्रोक्षति' इत्यादावपि ज्ञेयम्। 'कर्णावतंसः' इत्यत्र (का-सू २-२-१४) कर्णाभरणवाचिनाऽवतंसशब्देन भूषणमात्रे फलवती भागत्यागलक्षणा। फलं च तत्र स्थितत्वप्रतीतिः। 'वंशकरीरनीलैः' इत्यत्र वंशाङ्कुरवाचिना करीरशब्देन अङ्कुर-

---

चैत्यं—देवमन्दिरादि। विषयः=देशः। तादृशः=तन्नात्मकः। दुष्टतेति। काकवत् ये ये प्राणिनः दध्युपघातकाः तेषां सर्वेषामपि काकपदेन ग्रहणमित्यर्थः। ज्ञेयमिति। खरूपफलादीति शेषः। नलवाक्ये=नैषधीयचरितोक्ते। कर्णावतंस इति। 'पुंस्युत्तंसावतंसौ द्वौ

मात्रं लक्ष्यते। फलं तु चारुत्वप्रतीतिः। 'हिमांशुवंशस्य करीरमेव माम्' इति नलवाक्येऽपि तथैव। 'करिकलभः' इत्यत्र हस्तिबालकवाचिकलभशब्देन बालकमात्रं लक्ष्यते। तत्फलं तु प्रौढिप्रतीतिः। अत एव "एकार्थं पदमप्रयोज्यम्[1]" इत्युक्त्वा "करिकलभकर्णावतंसादिषु प्रतिपत्तिविशेषकरेषु न दोषः[2]" इत्याह वामनः॥

अत्र मतभेदः

केचित्तु—कलभादिपदे लक्षणा नास्ति, विशिष्ट वाचकत्वाभावात्। "कलभः करिपोतः स्यात्" इति कोशे कर्यादिसम्बन्धाभिधानं प्रयोगरूढि प्रदर्शनार्थमित्याहुः। तेन "भ्रमरकलभौ कर्णयुगलम्" इति शङ्करस्वामिप्रयोगे लक्षणा न स्यात्॥

तत्र स्वमतम्

वस्तुतस्तु प्रयोगरूढिः लोकसिद्धेति कोशादौ तन्निर्देशोऽनावश्यकः। तेन यथोक्तमेव साधु।

---

कर्णपूरे च शेखरे' इति मेदिनीकोशः। करीरेति। 'वंशाङ्कुरे करीरोऽस्त्री' इत्यमरः॥

करिकलभः इति। 'नहि नहि करिकलभोऽसौ' इति कुवलया-

---

[1] काव्यालङ्कारसूत्रवृत्तिः–2-2-11, 5.1.1.

[2] काव्यालङ्कारसूत्रवृत्तिः 2.2.14–17.

'सकीचकैः' इत्यत्र कीचकशब्देन वेणुमात्रे फलवती भागत्यागलक्षणा। फलं तु चारुशब्दोत्पत्तिप्रतीतिः। अन्यथा वेणुमेव ब्रूयात्। अत एव वामनः-'विशिष्टवाचकानां पदानां विशेषणविशेष्यान्यतरसमवधाने सति विशेष्यविशेषणान्यतरमात्रपरता ग्राह्या' इति[1]। 'पुंस्कोकिलः' 'पुंगवः' इत्यादिषु विशेषणमात्रे इयमेव लक्षणा। तथा च वामनः—सविशेषणे हि विधिनिषेधौ सति विशेषणे बाधे विशेष्यमुपसंक्रामतः; सति विशेष्ये बाधे विशेषणमुपसंक्रामतः[2] इति 'वंशाङ्कुरश्चारुरस्ति' इत्यत्र विशेषणमात्रे लक्षणेयमेव॥

नन्दे उदाहृतमत्र स्मर्यते। कलभशब्दस्य केवलशिशुवाचकत्वात् गजशिशुवाचकत्वाभावादित्याह—विशिष्टवाचकत्वाभावादिति॥

सकीचकैरिति। 'सकीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम्' इति रघुवंशे द्वितीयसर्गे। कीचका वेणवस्ते स्युः ये स्वनन्त्यनिलोद्धताः' इत्यमरः। ग्राह्येति। 'विशेषणमात्रप्रयोगः विशेषप्रतिपत्तौ, विशेषणस्य विशेषप्रतिप्रतिपत्त्यर्थं उक्तार्थस्य पदस्य प्रयोगः' इति तत्रत्या पङ्क्तिः। लक्षणेति। तत्र कोकिलः गवः इत्यादि पुल्लिंगान्तपदप्रयोगादेवापुंस्त्वप्रतीतेरिति भावः। इयमेव जहदजहल्लक्षणा।

सङ्क्रामतः इति। "सम्भाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ" इति तत्रत्या पङ्क्तिः। विशेषणमात्रे इति। तथा च चारुशब्देन सौन्दर्यबोधः। इयं च फलवती जहदजहल्लक्षणेति भावः॥

[1] काव्यालङ्कारसूत्रवृत्तिः–2-2-18, 5-11-10.

[2] काव्यालङ्कारसूत्रवृत्तिः–5-1-10.

अगूढफला लक्षणा

[1]अथागूढफला । यद्यप्यगूढता नावश्यं वक्तव्या, तथाऽपि प्राचीनानुसारेणोच्यते । "गडुद्वयमिदं पीडयिष्यति किं तदेवाग्रे कथयिष्यति" इत्यत्र कथनशब्देन बोधनमात्रेऽगूढफला । फलं तु सुखयिष्यतीति प्रतीतिः । "वसन्तस्तरून्नर्तयति" । इत्यत्र वसन्तशब्देन तद्वर्तिनि मारुतेऽगूढफला जहल्लक्षणा । फलं तु मन्दगत्या तरुचारुताऽऽपादकत्वप्रतीतिः । "फलिता रम्भा जनानाह्वयति[2]" अत्र रम्भाशब्देन तच्छिरोभागेऽगूढफला जहदजहल्लक्षणा । फलं तु फलस्वादुताप्रतीतिः, भूरित्वप्रतीतिश्च । काव्यप्रकाशे भागत्यागलक्षणा नास्ति, जहल्लक्षणायामन्तर्भावात् ॥

शुद्धा फलवती जहल्लक्षणा

अथ समानाधिकरणविषया, सारोपा साध्यवसाना च कार्यकारणभावादौ शुद्धा जहल्लक्षणा ।

---

अगूढतेति पाठेऽपि—अगूढफला इयं लक्षणेत्यर्थः । अस्या अपि फलवतीलक्षणारूपत्वादिति भावः । सुखयिष्यति=सुविदितं करोति । वसन्तः इति । वसन्त्यत्र मदनोत्सवाः इति वसन्तः ॥

रम्भा=कदलीवृक्षः । भागत्यागलक्षणा=जहदजहल्लक्षणा । विषयेति । लक्षणेति शेषः । सारोपा साध्यवसाना चेति द्विविधेत्यर्थः ।

---

[1] अथागूढताफला–क. [2] जनान् न आह्वयति–ख.

यथा "आयुर्घृतम्, आयुरेवेदं" इत्यत्र शुद्धा फलवती जहल्लक्षणा। फलं त्वसाधारणकार्यकारित्व प्रतीतिः। एवं तात्स्थ्यात्ताच्छब्द्यम्–"कलिङ्गः साहसिकः"। तादर्थ्यात्–ताच्छब्द्यम् इन्द्रार्था स्थूणा 'इन्द्रः'। स्वस्वामिभावात्ताच्छब्द्यम्–'राजकीयः पुरुषो राजा' इति॥

**गौणी अजहल्लक्षणा**

सादृश्यसम्बन्धे तु गौणी अजहल्लक्षणा। यथा 'मुखचन्द्रः, चन्द्र एवायम्'। 'गौर्वाहीकः, गौरेवायम्' 'अग्निर्माणवकोऽग्निरेवायम्' 'पण्डितोऽयम परः सूर्यः, सूर्य एवायम्' 'सिंहो देवदत्तः, सिंह

---

कार्येति। इयं लक्षणेत्यादिः॥

'आयुर्घृत'मित्यत्र सारोपा। 'आयुरेवेद'मित्यत्र साध्यवसानेति ज्ञेयम्। फलं त्विति। अर्थात् कार्यकारणभावसम्बन्धेन घृतस्य आयुर्वर्धकत्वप्रतीतिरित्यर्थः॥

तात्स्थ्यात् – तदाधारकत्वात्। तथा च अत्र आधाराधेयभावः सम्बन्धः। कलिङ्गः=कलिङ्गदेशवासी जनः। मुखेत्यादि। चन्द्रसादृश्यमेव मुखे प्रतीयते। तत्र मुखचन्द्रः इत्यत्र गौणीसारोपा अजहल्लक्षणा। चन्द्र एवायमित्यत्र तु साध्यवसाना अजहल्लक्षणा॥

गौरित्यत्र जडत्व-मन्दत्वे। तत्र पूर्वं सारोपा, उत्तरत्र साध्यवसाना। अग्निरित्यत्र तीक्ष्णत्वम्, तेजस्वित्वं च। क्रमेण सारोपासाध्यवसाने। सूर्यः इत्यत्र तेजस्विता, सिंहः इत्यत्र शूरता च प्रतीयते॥

एवायम्', इत्यादिष्वजहल्लक्षणा पूर्वार्थापरित्यागेन गुणरूपाधिकार्थग्रहणात् ॥

अवयवावयविभावे जहदजहल्लक्षणा

अवयवावयविभावे च जहदजहल्लक्षणा । यथा 'अग्रसानुषु' 'अग्रहस्तः' 'हस्ताग्रम्' 'अग्रपादः' 'अग्रसेना' इत्यादिषु । फलं तु महत्त्वादिप्रतीतिः ॥

निरूढा लक्षणा

निरूढा यथा–'रवौ नीलं बुधे पीतम्' इत्यत्र रविबुधशब्दाभ्यां तद्वारयोर्निरूढा जहल्लक्षणा । 'मातृविद्धो गणेश्वरः' इत्यादौ मातृशब्देन तृतीया, गणेशशब्देन चतुर्थी च लक्ष्यते । इयं च प्राणप्रदार्थित्वात् फलवतीति केचित् । 'यमो न गमने शस्तः' इह यमशब्देन भरणीनक्षत्रं लक्ष्यते । तत्रापि पक्षद्वयम् । 'हस्तिहस्तः' 'करिकुम्भः' अत्र

---

जहदिति । भागत्यागलक्षणेत्यर्थः । सानुः पर्वतप्रान्त्यभागः । निरूढा लक्षणा । वारः=वासरः । तृतीया तिथिः । चतुर्थी तिथिः । रवाविति । "भानुर्हंसः सहस्रांशुः तपनस्सविता रविः । कर्मसाक्षी जगच्चक्षुः अंशुमाली त्रयीतनुः" इत्यमरः ॥

पक्षद्वयम्=निरूढा जहल्लक्षणेति केचित् । फलवती लक्षणेत्यन्ये ।

हस्त-कुम्भशब्दाभ्यां सादृश्याच्छुण्डायां शिरः-पिण्डयोश्च निरूढा जहल्लक्षणा। 'बाणैरश्वैश्च हायनैः' इत्यत्र बाणशब्देन पञ्चसंख्यारूपगुणसादृश्यात् पञ्च हायनानि लक्ष्यन्ते। एवमश्वशब्देन सप्त। केचित् बाणाश्वशब्दाभ्यां द्रव्यरूपाभ्यां पञ्चसप्तसंख्ययोर्लक्षणा, ततश्च हायनेषु लक्षणेत्याहुः। अन्ये तु बाणशब्देन स्मरबाणेषु लक्षणा, ततश्च संख्यायाम्, ततो हायने इत्याहुः। एवमश्वशब्देन सूर्याश्वेषु। शेषं तुल्यम्॥

निरूढा अजहल्लक्षणा

अथ निरूढा अजहल्लक्षणा। 'श्वेतो धावति' इत्यत्र गुणवाचिना श्वेतशब्देन तदाश्रयणे हयादौ निरूढाऽजहल्लक्षणा। "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति"। इत्यमरकोशोक्तेः। केचित्तु–श्वेतो वर्णः अस्यास्तीति श्वेतः। अस्त्यर्थे

---

केचित्तु=वैयाकरणास्तु। श्वेत इति। एवं 'शोणो धावती'त्यत्र गुणवाचिना शोणशब्देन तदाश्रये हये, हयादौ च अजहल्लक्षणा। गुणवचनेभ्यः इति। 'सत्यनुशासने लक्षणायाः अन्याय्यत्व'मिति वार्तिकेनात्र शक्तिरेवेति भाव्यम्। शक्तिरेव=अभिधैनेति यावत्। लक्ष्यन्ते इति। निरूढया लक्षणयेति शेषः। फलवत्यपि=फलवती लक्षणाऽपीत्यर्थः। ज्ञेयमिति। अजहल्लक्षणाद्वारा कुन्तधारियष्टिधारिणां प्रतीतिरित्यर्थः॥

मतुप्। 'गुणवचनेभ्यो मतुपो लुगिष्यते' इति तस्य लुकि शक्तिरेवेत्याहुः। 'मञ्चाः क्रोशन्ति' इत्यत्र मञ्चशब्देन तत्रस्था लक्ष्यन्ते। अत्र फल-विवक्षायां तु 'तात्पर्याद्विशेषावगतिः' इति न्यायेन फलवत्यपि भवति। एवं 'कुन्ताः प्रविशन्ति' 'यष्टयः प्रविशन्ति' इत्यादावपि ज्ञेयम्॥

'द्रोणो व्रीहिः' अत्र द्रोणरूपमानपात्रेण परि-च्छिन्ने व्रीहौ द्रोणशब्दः लाक्षणिकः। वैयाकर-णास्तु 'परिमाणं विभक्त्यर्थः' इत्याहुः॥

वस्तुतस्तु सामान्याकारेण परिमाणं शक्यार्थः। द्रोणरूपविशेषाकारेण लक्ष्यार्थ एव। 'सुरद्विषश्चा-न्द्रमसी सुधेव' इत्यत्रासुरसामान्यवाचिना सुरद्विट्-शब्देन राहुरूपो विशेषो लक्ष्यते। 'निर्विशेषं न सामान्यं विशेषा न तदुक्तितः' इति न्यायाद्विशे-षार्थलक्षणायां सामान्यार्थो नास्ति। "तदा निद-

---

इत्याहुरिति। 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' इत्यादिभिरित्यर्थः। "पलं च कुडवः प्रस्थः आढको द्रोण एव च। क्रमाच्चतुर्गुणाः ज्ञेयाः खारी द्रोणचतुष्टयम्" इति विश्वकोशः। स्वमतमाह वस्तुतस्त्विति। तथा च विभक्त्यर्थः इत्यस्य विभक्तिशक्यार्थः इत्यर्थः॥

विशेषः लक्ष्यते इति। निरूढा अजहल्लक्षणाद्वारेत्यर्थः। सामा-न्यार्थः = अभिधाद्वारा जायमानोऽर्थः। समुद्रेति। उत्तरपद्ये इति शेषः॥

अयं—श्लोकः। "वेशन्तः पल्वलं चाल्पसरो वापी तु दीर्घिका"।

द्रावुपपल्वलं खगः" इत्यत्र सरोविशेषवाचिना पल्वलशब्देन तत्सामान्यं लक्ष्यते। अत्राप्युक्तन्यायेन न विशेषार्थत्यागः। लक्षणां विना समुद्रतुल्योक्तिर्न स्यात् इति॥

निरूढा जहदजहल्लक्षणा

अथ निरूढा जहदजहल्लक्षणा। "गृहं सम्मार्ष्टि" अत्र गृहशब्देन तदेकदेशे निरूढा जहदजहल्लक्षणा। एवं 'कुसुमितद्रुमम्' इत्यादावपि। अथ 'सोऽयं देवदत्तः' अत्र पूर्वकालोत्तरकालवर्तित्वपरित्यागेन देवदत्तमात्रं लक्ष्यते। एवं "शिवोऽहम्" "सोऽहम्" "तत्त्वमसि" इत्यादावपि॥

लक्षणाप्रयोजकसम्बन्धभेदाः

अथ लक्षणाप्रयोजकः सम्बन्धो निरूप्यते। स च त्रिविधः संयोगः समवायः विशिष्टबुद्धि-

---

इत्यमरः। लक्षणां विनेति। "पयोधिलक्ष्मीमुपि केलिपल्वले रिरंसुहंसी कलनादसादरम्"। इति समुद्रतुल्योक्तिरिति भावः॥

कुसुमितेति। "तदुपभोगरसं हिमवर्षिणः परमृतोरमृतोपमतां ययौ। विशदचन्द्रकरं सुखमारुतं कुसुमितद्रुममुन्मदकोकिलम्" इति रघुवंशे नवमसर्गे॥

योग्यश्चेति[1] । "सम्बन्धबुद्धिजनकः सम्बन्धः" इति तल्लक्षणम् ।।

तत्र संयोगः तस्यानेकविधत्वं च

अत्र द्रव्ययोरेव संयुक्तबुद्धिहेतुः संयोगः विशेषगुणः । स च नानाविधः ।।

तत्र व्याप्यव्यापकभावः

'आत्मानमलंकरोति' अत्रात्मशब्देन तत्संयोगि शरीरं लक्ष्यते । व्याप्यव्यापकभावसंयोगोऽयम् ।।

---

द्रुममिति वृक्षवाचकद्रुमशब्देन वृक्षैकदेशार्थप्रतीतिरपि निरूढा जहदजहल्लक्षणयेत्यर्थः । मात्रं लक्ष्यते इति । निरूढाजहदजहल्लक्षणयेत्यर्थः । शिवोऽहमित्यादौ तत्ता-इदन्ताऽहन्तादिनां त्यागेन सामान्यमात्रार्थप्रतीतिः जहदजहल्लक्षणाद्वारेति बोध्यम् । आत्मानमित्यत्र जीवरूपचेतनद्रव्यवाचिना आत्मशब्देन जीवसंयुक्तं शरीरं लक्ष्यते । सम्बन्धश्च 'एतौ सम्बद्धौ' इति प्रतीतिजनकः ।।

संयोगः इति । शरीरात्मनोरिति शेषः । केचित्तु वैयाकरणास्तु । सामीप्यं वटभूतलयोः । धार्येति । स च सम्बन्धः गजस्य घण्टायाश्च । पुंयोगादिति । या पुमाख्या पुंयोगात् स्त्रियां वर्तते ततो ङीप् स्यात्—इति

---

[1] योग्यं चेति—च

सामीप्यम्

"वटे गावः सुशेरते" अत्र वटशब्देन तत्संयोगि भूतलं लक्ष्यते। तत्र सामीप्यं सम्बन्धः। केचित्तु सामीप्यं सप्तम्यर्थ इत्याहुः ॥

धार्यधारकभावः

'घण्टापथः' अत्र घण्टाशब्देन तदुपलक्षिताः गजाः लक्ष्यन्ते। धार्यधारकभावश्च सम्बन्धः ॥

भर्तृभार्यात्वम्

'गणकी' 'लेखकी' अत्र गणक-लेखकशब्दाभ्यांतत्पत्न्यौ लक्ष्येते। भर्तृभार्यात्वं च सम्बन्धः। 'पुंयोगादाख्यायाम्' इति ङीष्। स्त्रीपुंसयोर्भिन्नस्थानावस्थानेऽपि विवाहकाले हस्तयोजनजन्मा संयोगो यावज्जीवं न निवर्तते[1]। भर्तृभार्यात्वेनेमौ संयुक्तकौ इति धीजनकत्वात्, यज्ञादौ सहाधिकाराच्च ॥

---

सूत्रार्थः। घण्टापथ इति। "कर्तुं प्रवेशमिह भारविकाव्यबन्धे घण्टापथं कमपि नूतनमाततनिन्ये" इति मल्लिनाथीयकिरातार्जुनीयव्याख्याने। "घण्टापथः संसरणं तत्पुरस्योपनिष्कुरम्"। इत्यमरः ॥

सहेति। दम्पत्योरिति शेषः। सेन्येति। यथोक्तं महाभारते—उद्योगपर्वणि। 'तेषु राजसु सर्वेषु निवृत्तेषु जनार्दनः। तूर्णमभ्यपत-

[1] यावज्जीवनं निवर्तते-ख-ग.

उपलक्षणविधा

"सैन्यसुग्रीववाहनः" अत्रोपलक्षणेन मेघपुष्पबलाहकावपि गृह्येते । तदग्रिमश्लोके "ते हयाः वासुदेवस्य" इति बहुत्वश्रवणात् ॥

साहचर्यम्

साहचर्यं च सम्बन्धः । 'श्यालः स्वस्रोरथाग्रहीत्' इत्यत्र स्वसा च स्वसा च स्वसारौ तयोः । अत्र द्वितीयस्वसृशब्देन तत्पतिर्लक्ष्यते । यज्ञादिषु साहचर्यात् । एवं "प्रथमयोः पूर्वसवर्णः[1]" अत्रापरेण प्रथमाशब्देन द्वितीया लक्ष्यते; साहचर्यात्, शब्दस्य द्रव्यत्वाच्च ॥

आधाराधेयभावः

'गरुडेन निषादग्रामो भक्षितः' अत्र ग्रामशब्देन ग्रामवासिनो जनाः लक्ष्यन्ते । आधाराधेयभावश्च सम्बन्धः । 'सेतुबन्धे नरः स्नात्वा'

---

दृष्टः सैन्यसुग्रीववाहनः' । इति । श्याल इति । भागवते दशमस्कन्धे चतुर्थाध्याये । एतत्प्रकरणे एव कौमुद्याम् – प्रथमा च प्रथमा च प्रथमे, तयोः इत्युक्तम्–'प्रथमयोः पूर्वसवर्णः' इति सूत्रे ॥

प्रथमयोरिति । अकः प्रथमाद्वितीययोः विभक्त्योः अचि परे पूर्णसवर्णदीर्घः एकादेशः स्यात् इत्यर्थः । प्रथमा च प्रथमा च प्रथमे,

---

[1] अष्टाध्यायी-6.1.102.

इत्यत्र सेतुबन्धशब्देन तदाधारः समुद्रो लक्ष्यते । आधाराधेयभावः सामीप्यं वा सम्बन्धः । एवमन्यत्राप्यूह्यम् ॥

समवायः तद्भेदाश्च

नित्यसम्बन्धः समवायः । सः पञ्चविधः अवयवावयविभावः, गुणगुणिभावः, क्रियाक्रियावद्भावः, जातिव्यक्तिभावः, विशेषनित्यद्रव्यभावश्चेति । क्रमेणोदाहरणानि यथा—

तत्र अवयवावयविभावः

'शाखामृगो वनमृगः[1]' इह शाखाशब्देन तरुर्लक्ष्यते अवयवावयविभावसम्बन्धात् । वनशब्देनापि तथैव । न हि वानरस्य केवलायां शाखायां सकले वने वा नियतः सञ्चारः । वृक्षे तु नियतः इति । "सैन्यानि सोमान्वयमन्वयुस्तम्," "न तं मनोरन्वयमन्वमन्यत" इह

---

तयोरित्यर्थः । शब्दस्य प्रथमादिशब्दस्येत्यर्थः । अन्यथा साहचर्यानुपपत्तेः । आधारेति । ग्रामजनयोरित्यर्थः ॥

शाखेति । शखामृगशब्दः वनमृगशब्दश्च कपिवाचकः इत्यर्थः । नात्रामरकोशस्थपङ्क्त्युद्धारः । वनं अरण्यम् । आरण्याः पशवः मृगाः इति भावः ॥

---

[1] वेनमृगः-ख

वंशवाचिनाऽन्वयशब्देन तदेकावयवो लक्ष्यते। एवं 'रघूणामन्वयं वक्ष्ये,' "निरुद्ध्यमाना यदुभिः कथञ्चित्" इह रघु–यदुशब्दाभ्यां तदवयवाः लक्ष्यन्ते। "सन्तानो हि शरीरावयवः" इति धर्मशास्त्रे। "और्वः" "पृथ्वी" इत्यत्रौर्वशब्देन पुत्रत्वेन स्वीकृतः वडबाग्निर्लक्ष्यते। पृथ्वीशब्देन पृथुना पुत्रत्वेन स्वीकृता भूमिश्च लक्ष्यते। 'पुंयोगादाख्यायाम्' इति ङीष्। 'देवक्या सूर्यया सार्धम्' इहाप्युक्तसूत्रेण ङीष्। (सूर्यपुत्रीत्वात्) देवकपुत्रीत्वात् देवकी सूर्येति तदभिधानम्। न तु सूर्याशब्दः नवोढावाचकः। एवं कुन्तीशब्दोऽपि, कुन्तभोजपुत्रीत्वात्; इत्यादि स्वयमूह्यम्॥

गुणगुणिभावः

गुणगुणिभावो यथा – 'सुरभिषु फलेषु मानसम्' इह सुरभिशब्देन सुगन्धवाचिना

---

रघूणामिति। रघुवंशे प्रथमसर्गे। और्वः इति। "और्वस्तु वाडवो वडवानलः"। इत्यमरः। पुंयोगादिति। 'पुंयोदाख्यायामिति' सूत्रे पुंयोगः न दाम्पत्यरूप एव। किन्तु जन्यजनकभावलक्षणोऽपि। तेन कैकयी इत्यपि भवति। देवक्या इति। भागवते दशमस्कन्धे प्रथमाध्याये॥

सुरभिष्विति। किरातार्जुनीये द्वादशे सर्गे। शिशिरेऽपीति।

तदाश्रयीभूतफलानि लक्ष्यन्ते । गुणगुणिभावश्च सम्बन्धः । 'शिशिरेऽपि पयसि' इत्यत्र तु न लक्षणा । " शीतं गुणे तद्वदर्थाः " इति श्लोके अमर सिंहेन द्रव्यवाचित्वाभिधानात् । 'शर्करामास्वादयति' इत्यत्र शर्कराशब्देन तद्गतमाधुर्यगुणः लक्ष्यते । गुणगुणिभावोऽत्र सम्बन्धः ॥

क्रियाक्रियावद्भाव:

क्रियाक्रियावद्भावो यथा—'पश्य मृगो धावति' इति । अत्र धावतीति क्रियापदेन क्रियाविशिष्टो-मृगो लक्ष्यते । " क्रिया नामेयमत्यन्तापरिदृष्टा " इति भाष्यकारोक्त्या तद्दर्शना[1]सम्भवात् क्रियाक्रियावद्भावः सम्बन्धः । एवं " नृत्यं पश्यति वेश्यायाः " इत्यादावपि । 'भेर्यः श्रूयन्ते' अत्र भेरीशब्देन तद्गर्जितं लक्ष्यते । सम्बन्धस्तु स एव । भेर्याकाशस्य गुणित्वं शब्दस्य च गुणत्व

---

अयं च किरातार्जुनीये द्वादशे सर्गे एव !!

क्रिया नामेति । 'अन्यन्तापरिदृष्टा पिण्डीभूता नशक्यते निदर्शयितुम्' । इति समग्रं भाष्यवाक्यम् । क्रियापदे जिघ्रतीत्यत्र भागात्यागलक्षणा—जहदजहल्लक्षणा । अत्र क्रियायाः केवलं उपादानार्थकत्वात् । भुजाभ्यामिति ईश्वरस्येति शेषः । 'बाहू राजन्यः कृतः' इति श्रुतेः । स

---

[1] त्यन्तापरदृष्टा इति भाष्यात्तद्दर्शना—ग. त्यन्तादृष्टा इति भाष्यात्तद्दर्शना—घ.

मिति गुणगुणिभावः । 'पुष्पं जिघ्रति' तद्गन्धं गृह्णातीत्यर्थः । पुष्पस्य पृथ्वीमयत्वात् । गन्धेन सह गुणगुणिभावः । 'तद्गन्धं जिघ्रती'त्यत्र न लक्षणा । क्रियापदे तु भागत्यागलक्षणा, उपादानमात्रार्थत्वात् ॥

जातिव्यक्तिभावः

जातिव्यक्तिभावश्च यथा – 'क्षत्रजातिरुदियाय भुजाभ्याम्' इत्यत्र क्षत्रजातिशब्देन तदाश्रयीभूताः व्यक्तयो लक्ष्यन्ते । जातिव्यक्तिभावश्च सम्बन्धः । 'न जातु ब्राह्मणं हन्यात्' इह व्यक्तिपरेण ब्राह्मणशब्देन तत्समवेता जातिर्लक्ष्यते । अन्यथा सर्वेषामवध्यत्वं न स्यात् । सम्बन्धस्तूक्त एव । सामान्यविशेषभावोऽप्येवमेव । केचित्तु–'बहुव्यापकं सामान्यम्, अल्पव्यापकं विशेषः' इति लक्षयित्वा, तदतिरिक्तमपि सामान्यविशेषभावमाहुः । यथा – 'जनेन यूनः स्तुवता' इत्यत्र यूनः इत्यनेन यौवनविशिष्टाः

---

एवेति । क्रियाक्रियावद्भाव एवेत्यर्थः । क्षत्रजातिरिति 'अवयवविशेषव्यङ्ग्या जातिः' इति वैयाकरणभूषणसारः । क्षत्रेत्यादिः नैषधे प्रथमसर्गे । उक्त एवेति । जातिव्यक्तिभावः इत्युक्तः इत्यर्थः । जनेनेति । नैषधे प्रथमसर्गे ॥

राजानो लक्ष्यन्ते । 'निदर्शनं नैषधम्' इति नलं प्रति निर्देशात् । 'अदेवमातृकाः कुरवः' अत्राऽदेवमातृकशब्देन नदीमातृकाः लक्ष्यन्ते । अन्यथा देवरूपमातृरहिताः इत्यर्थः स्यात् । सामान्यविशेषभावश्च सम्बन्धः । यतो देवमातृकभिन्नाः कूपादिमातृकाः अपि देशाः भवन्ति । एवं 'असितयामिनीष्वनीलवाजिनम्' इत्यादावपि द्रष्टव्यम् ॥

विशेषनित्यद्रव्यभावः

विशेषनित्यद्रव्यभावो यथा – 'स एव कालेन दुरत्ययेन ते' अत्र कालेनेति भावप्रधाननिर्देशः ।

---

असितयामिनीषु=कृष्णपक्षेषु । अदेवमातृकाः इति । "वितन्वति क्षेममदेवमातृकाः चिराय तस्मिन् कुरवश्चकासति" । इति किरातार्जुनीये प्रथमसर्गे । "देशो नद्यम्बुवृष्ट्यम्बुसम्पन्नव्रीहिपालितः । स्यान्नदीमातृको देवमातृकश्च यथाक्रमम्" । इत्यमरः ॥

"गिरयो देवखातानि नद्यः प्रस्रवणानि च । देवालयान्यरण्यानि गम्यानि मुनयो विदुः" । इति जैमिनिः । असितेति । "सततमसितयामिनीषु शम्भोः धवलयतीह वनान्तमिन्दुलेखाः" । इति किरातार्जुनीये पञ्चमसर्गे । स एवेति । भागवते दशमस्कन्धे पञ्चमाध्याये ॥

सम्बन्धः-लक्षणाद्वारा बोध इति यावत् । तज्जन्ये-स्मृतिजन्ये । तत्कृताः ग्रन्थाः इति । इदं एवं चिन्त्यम् । नित्यद्रव्यस्येति । "पृथि-

तेन नित्यद्रव्यस्य कालस्य सम्बन्धः इति तार्किकाः ॥

विशिष्टबुद्धिजनकः

यद्वशात् 'अयमनेन विशिष्टः' इति बुद्धिरुत्पद्यते स विशिष्टबुद्धिजनकः । स नानाविधः ॥

तत्र जन्यजनकभावः

तत्र जन्यजनकभावो यथा – 'विधिहेतुरहेतुरागसाम्' अत्रागश्शब्देन तज्जन्यं दुर्यशो लक्ष्यते । तेन दुर्यशसामहेतुरर्थसिद्धः इति । एवं 'मुनिभिः स्मृतः' अत्र स्मृतशब्देन तज्जन्ये कथने लक्षणा । 'मुनयो विदुः' अत्र विदुरित्यनेन तत्कृताः ग्रन्थाः लक्ष्यन्ते ॥

विशेषणविशेष्यभावः

'ओम् इत्येकाक्षरं ब्रह्म' इति वाक्ये ब्रह्मशब्देन ब्रह्मवाचकमित्यर्थो लक्ष्यते । विशेषण-

---

व्यादिचतुष्टयपरमाणवः आकाशादिपञ्चकं च नित्यद्रव्याणी"ति तार्किकाः ।

विधीति । किरातार्जुनीये द्वितीयसर्गे । किञ्चिदर्थ=रामनिष्ठवैशिष्ट्यरूपार्थं ॥

" ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् । यः प्रयाति त्यजन् देहं स याति परमां गतिम् " । इति भगवद्गीता । काक इति ।

विशेष्यभावश्चात्र सम्बन्धः। "काकः काकः पिकः पिकः" इत्यत्र काकपिकशब्दाभ्यामुक्त सम्बन्धेन निन्दास्तुती लक्ष्येते। 'धनुर्भृतां हस्तवतां पृपत्काः' इह हस्तशब्देन प्रशस्ताः हस्ताः लक्षयन्ते। एवं 'रामस्य गात्रमसि' इत्यादौ व्यर्थं पदं किञ्चिदर्थं गमयति। अत्र विशेषण-विशेष्यभावः सम्बन्धः ॥

**वर्ण्यवर्णकभावः**

'हरिवंशः श्रूयते', 'रघुवंशः पठ्यते' इत्यादौ हरिवंशरघुवंशशब्दाभ्यां तत्प्रतिपादकयोः ग्रन्थयोः लक्षणा। वर्ण्यवर्णकभावः सम्बन्धः। 'कुमारकिरातनैषधाः पठनीयाः' अत्रापि वर्ण्य-नामभिस्तद्वर्णका ग्रन्था लक्षयन्ते। नामैकदेशेन समस्तनामग्रहणं चेत् अवयवावयविभावोऽस्तु ॥

---

"काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः। वसन्तसमये प्राप्ते काकः काकः पिकः पिकः" इति पूर्णः श्लोकः। धनुर्भृतामिति। 'अप्यर्धमार्गे परबाणलूनाः धनुर्भृतां हस्तवतां पृषत्काः'। इति रघुवंशे सप्तमे सर्गे ॥

नामैकदेश इति। भीमसेनो भीमः इतिवत्। अत्र-'येनेन्द्रियेण यद् गृह्यते तेनैवेन्द्रियेण तद्गता जातिरपि गृह्यते' इति न्यायः अनुसन्धेयः ॥

उपमानोपमेयभावः

'अनुकूलं भाषसे' इहापि कूलमनुगतमनुकूलमिति व्युत्पत्त्या तीरलग्नं नदी[1]जलं वाच्यम्। तत्सादृश्यात् वचने लक्षणा। उपमानोपमेयभावः सम्बन्धः। 'विलोमं वक्ति'-अत्र विपरीतं लोम विलोमम् इति व्युत्पत्त्या वक्रीकृतं लोम वाच्यम्। तत्सादृश्याद्वचने लक्षणा। समीपं गताः सङ्गता आपः यस्मिन्निति व्युत्पत्त्या 'द्व्यन्तरुपसर्गेभ्यः' इत्यकारस्येकारः। सुलभं जलस्थानं वाच्यम्। तत्सादृश्यात्पार्श्ववर्तिनि प्रदेशे लक्षणा। एवं सम्बन्धान्तराणि स्वयं विभावनीयानि। प्रायो न्यायशास्त्रानुसारादियं विवेचना। अवयवावयविभावस्य कार्यकारणभावस्य सामान्यविशेषभावस्य च द्वैविध्येऽपि न दोषः॥

लक्षितलक्षणा

अथ त्रिविधे साक्षात्सम्बन्धे सत्येव लक्षणेति न नियमः। प्रत्यक्षे संयुक्तसमवायादिव पर-

---

त्रिविधे-संयोग-समवाय-विशेषणविशेष्यभावरूपे इत्यर्थः। संयुक्तेति। संयोगसमवायसमष्टिरूपे इत्यर्थः। संयुक्तेति। घटरूपप्रत्यक्षजनने संयुक्तसमवायः संनिकर्षः इति भाव्यम्। द्विरेफादेरिति।

---

[1] तीरलग्ननदी-घ.

म्परासम्बन्धस्यापि लक्षितलक्षणादावुपयोगदर्शनात्। तथा लक्षितेन लक्षणया गृहीतेन भ्रमरादिशब्देन द्विरेफादेः षट्पदपिण्डादौ लक्षणा लक्षितलक्षणा इत्युच्यते। तत्र द्विरेफशब्दः द्वौ रेफौ यस्मिन्निति व्युत्पत्त्या यौगिको न तु योगरूढः, भ्रमरशब्दपरतया प्रयोगादर्शनात्। तेन निर्जरगुर्झरनिर्झरादिसकल रेफद्वयान्वितशब्दसाधारणवाची, न तु केवल भ्रमरपरः। तत्र सामान्यविशेषभावसम्बन्धेन भ्रमरशब्दः लाक्षणिकः। यथा-'मुनिमभिमुखतां निनीषवो याः' इत्यत्र मुनिशब्दः नृपतिमुनौ लाक्षणिकः। "नृपतिमुनिपरिग्रहेण सा भूः" इति प्रयोगदर्शनात्॥

अथ वाच्यवाचकभावेन लक्षणयाऽभेदारोपात् भ्रमरशब्दलक्षितषट्पदे द्विरेफशब्दस्योक्तरीत्या लक्षितलक्षणा। तत्र सम्बन्धद्वयसम्भवात्परम्परासम्बन्धः। एवं-यत्र नामैकदेशे नाम-

---

"मधुव्रतो मधुकरो मधुलिण्मधुपालिनः। द्विरेफपुष्पलिड्भृङ्ग"-इत्याद्यमरः। नृपतिमुनौ-राजर्षौ। अभेदेति। वाच्यवाचकपदयोरिति शेषः॥

नृपतीति। किरातार्जुनीये पञ्चदशसर्गे। "मुनीषुदहनातप्तान्" इत्यत्रापि मुनिशब्दः नृपतिमुनौ लाक्षणिकः। ततश्चात्र अर्जुने लक्षणेति भाव्यम्। दशमे सर्गे अत्रैव तथा प्रत्युक्तम्॥

मात्रग्रहणं तत्रावयवावयविसम्बन्धेन समग्रशब्दे लक्षणा। ततस्तदर्थे वाच्यवाचकभावेनेति बोध्यम्। यथा—'आभाकासितपक्षेषु' इति। इहाऽऽभाकेति-शब्दावयवैराषाढभाद्रपदकार्तिकावयविनो लक्ष्यन्ते। ततस्तदर्थभूताः मासा इति। एवं 'भीमो भीमसेनः' इत्यादावपि द्रष्टव्यम्। व्याकरणमते तु "विनाऽपि प्रत्ययं पूर्वोत्तरयोर्वा लोपो वक्तव्यः" इति भीमादिषु शक्तिरेव। व्यतिरेकलक्षणायामपि परम्परा-सम्बन्ध एव। "नयेन जेतुं जगतीं सुयोधनः" इत्यत्र सुयोधनशब्देन दुर्योधनशब्दे लक्षणा। तत स्तद्वाच्ये राज्ञि, इति विवेकात्। एवं "साधु दूति पुनः साधु" इत्यादावपि बोद्धव्यम्॥

गौणीलक्षणायां विशेषाः

अथ गौण्यां विशेषः। गौणलक्षणायामपि परम्परासम्बन्धः, उपमानोपमेयधर्माणामभेदा-

---

आभाकासितेति। "मैत्रश्रवणरैवतैः। सङ्गमेनैव भोक्तव्यम् द्वादश द्वादशीर्हरेत्"। इति निबन्धग्रन्थे तच्छेषः। नयेनेति। किरातार्जुनीये प्रथमसर्गे। लक्षणा-विपरीतलक्षणा। साधु दूतीति। साधु दूति! "पुनस्साधु कर्तव्यं किमतः परम्। यन्मदर्थे विलूनाऽसि दन्तैरपि नखैरपि"। इति कुवलयानन्दे उदाहृतम्॥

गौणलक्षणायामिति। गौणी च सा लक्षणा चेति विग्रहः।

रोपानन्तरं द्वितीयलक्षणाप्रवृत्तेः । तत्र–राजेन्द्रः, राजेन्दुः, नृसविता, नृसोमः, भूपालसिंहः– इत्यादावुपमितिसमासे व्यस्तोपमायां समस्त रूपके च लक्षणा नास्ति । समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवदिति । शब्दार्थस्य एव कारार्थस्य च समासशक्त्या निर्वाहादिति–प्राञ्चः । यद्यपि सिद्धान्तकौमुद्याम् "इह पूर्वपदं तत्सदृशे लाक्षणिकम्" इत्युक्तम् तथापि लाक्षणिकसदृश-मित्याश्रयणेन समासशक्तिविवक्षैव तत्रानु सन्धेया । अन्यथा स्वसिद्धान्तभङ्गापत्तेः ॥

उपमानोपमेयभावः

'उद्बाहुरिव वामनः' इत्यादौ इवशब्दस्य सादृश्यवाचित्वादारोपाभावाच्च लक्षणाभावः । 'मुखचन्द्रः' इत्यादौ समस्तरूपके त्वारोपसत्वे

---

राजेन्दुरिति । "दिलीप इव राजेन्दुः इन्दुः क्षीरनिधाविव" इति रघुवंशे प्रथमसर्गे । नृसवितेति । "गगनमश्वखुरोद्धतरेणुभिः नृसविता सवितानमिवाकरोत्" इति । रघुवंशे नवमसर्गे । नृसोम इति । "तथे-त्युपस्पृश्य पयः पवित्रं सोमोद्भवायाः सरितो नृसोमः" । इति रघुवंशे पञ्चमसर्गे । भूपालसिंहः इति । "विस्माययन् विस्मितमात्मवृत्तौ भूपालसिंहं निजगाद सिंहः" । इति रघुवंशे द्वितीयसर्गे ॥

उद्बाहुरिति । रघुवंशे प्रथमसर्गे । व्यस्तोदाहरणानि इति । निरवयवलक्षणायाः समस्तोदाहरणस्थाने इति शेषः । दर्शितानीति ।

तस्य समासोत्पन्नसमुदायशक्त्या निर्वाहाल्लक्षणाऽभावः । अत एव व्यस्तोदाहरणानि प्राचीनैर्दर्शितानि । कोविदानन्देऽपि-"स्त्रीरत्नं गिरिजा[1]" इत्यत्र व्यस्तमेवोदाहरणमित्यवधेयम् । एवं वृत्त्यन्तरेऽप्यूह्यम् । अत्र उपमानोपमेयभावः सम्बन्धः । सादृश्यं च तदेव । तल्लक्षणं तूक्तं विद्यानाथेन —

"अन्योन्यधर्मशालित्वं
स्पष्टसादृश्यमुच्यते ।
तन्मूलमुपमादीनां
हारादीनां हिरण्यवत्" ॥ इति ॥

अत्र स्पष्टपदेन—देवदत्तयज्ञदत्तयोः पशुत्वाभावेन मनुष्यत्वब्राह्मणत्वादिधर्मेण सादृश्यं उक्तम् । स्पष्टत्वस्य सम्प्रदायारूढत्वात् । अन्योन्यशब्देन तद्धर्माभिन्नत्वमुक्तम् । भिन्नयोर्धर्मिणोरभिन्नधर्मशालित्वं सादृश्यमित्युक्तं भवति ॥

---

गौर्वाहीकः इत्यादीनि भावः । स्त्रीरत्नमिति । "स्त्रीरत्नं गिरिजा सैषः रत्नं संसारवारिधिः" । इति पूर्णमर्धम् ॥

---

[1] कोविदानन्दे 2–14.

अन्यधर्मस्यान्यत्रासम्भवाशङ्कानिरासः

नन्वन्यधर्मस्यान्यत्रासम्भवात् अन्योन्यधर्माभेदः कथमिति चेदुच्यते—'तापेन भ्राजते सूरः शूरश्चापेन राजते' इत्यादौ सूरशोभाशूरशोभयोः भेदेऽपि सजातीयत्वेन भेदाभावः। रूपकादौ त्वभेदारोपाद्भेदाभावः। अयं च वस्तुप्रतिवस्तुभावः इति कथ्यते। "त्वमेव कीर्तिमान् राजन्" ! इत्यादौ च कीर्तिमत्त्वकान्तिमत्त्वयोर्वैजात्येऽपि विम्बप्रतिविम्बभावेनाभेदप्रतीतियोग्यत्वम्। अत एव लक्षणेऽभिन्नपदेनाऽभेदप्रतीतियोग्यत्वं विवक्षितमिति बोध्यम्। सारोपायां गुणमात्रे लक्षणा। गुणी तु शक्त्या गृह्यते। साध्यवसानायां तु[1] द्वयोरपि, तत्र विषयस्य निगरणात्। स्वेच्छया अतस्मिन् तद्बुद्धिः आरोपः। स्वेच्छया विषयिणा विषयग्रहणमध्यवसानम्। 'गौणी वृत्तिस्तु भिन्नैव' इत्युक्तम् ॥

---

सूरः=सूर्यः। "सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः" इत्यमरः। विधुरेवेति। "हिमांशुश्चन्द्रमाश्चन्द्रः इन्दुः कुमुदबान्धवः। विधुस्सुधांशुः शुभ्रांशुः ओषधीशो निशापतिः" इत्यमरः ॥

शक्त्या गृह्यते इति। अन्ये पुनः—गोशब्देन वाहीकार्थो नाभिधीयते। किन्तु स्वार्थसहचारिगुणसाजात्येन वाहीकार्थगताः गुणा एव लक्ष्यन्ते इत्याहुः। तदप्यन्ये न मन्यन्ते। "गोशब्दो मुख्यया वृत्त्या

---

[1] सारोपायां तु—ग.

लक्षणाया आवश्यकता, वृत्तीनां प्रयोक्तारश्च

यदि लक्षणावृत्तिर्न स्यात् तर्हि–घृणाकरं त्रपाकरं अमङ्गलं–चेति त्रिविधमश्लीलं वारयितुं कः क्षमेत[1] । तथाहि–

" विष्ठोत्सारणकर्ता मर्त्ता
कार्येषु पादचार्यनुगः ।
कृतयाभना च विटस्त्री
कार्ये गर्ह्येऽपि तुच्छमूल्यानि " ॥

अत्र लक्षणया दोषोद्धारः–

" मलसम्मार्जनकर्ता
त्यक्तात्मदेहश्च पादचार्यनुगः ।
कृतगमना च विटस्त्री
कार्ये गुह्येऽपि तुच्छमूल्यानि " ॥

---

वाहीकशब्देन सहान्वयमलभमानः अज्ञत्वादिसाधर्म्यसम्बन्धात् वाहीकार्थं लक्षयती"त्याहुः । निगरणादिति । स्वशब्देनानुपादानादित्यर्थः ॥

कार्येषु=स्वामिकार्यानन्तरमित्यर्थः । कृतयाभना–कृतसम्भोगा । तुच्छमूलानि अल्पमूल्यानि । अस्यैव श्लोकस्य अश्लीलपदवर्णं रूपान्तरम्-मलेत्यादि ॥

---

[1] क्षमते–घ.

अत एवाहुः—

" शक्तिं भजन्ति सरलाः
लक्षणां चतुरा नराः ।
व्यञ्जनां नर्ममर्मज्ञाः
कवयः कमना जनाः ॥

इति श्री आशाधरभट्टकृतायां त्रिवेणिकायां
द्वितीयं लक्षणविवेचनाप्रकरणम् ॥



सरलाः प्रकृतिसहजवृत्तयः सारल्यवन्तः जनाः । नर्म=नर्मवचनम् । कमनाः सहृदयाः ॥



## अथ तृतीयं व्यञ्जनाविवेचनाप्रकरणम्

व्यञ्जनास्वरूपं तद्भेदाश्च

अथ व्यञ्जनाप्रकरणं लिख्यते । शक्यलक्ष्यातिरिक्तार्थबोधिका वृत्तिः व्यञ्जना । सा च मुख्यार्थबाधाभावेऽपि प्रवर्तते । शक्यलक्ष्यार्थबोधानन्तरं च । तेन सा शक्तिमूला लक्षणामूला चेत्याहुः । दूरार्थबोधे व्यञ्जनामूलाऽपि व्यञ्जना भवति । अथ क्रमेणोदाहरणानि ॥

तत्र शब्दशक्तिमूला व्यञ्जना

तत्र प्रकृताप्रकृतश्लेषे शब्दशक्तिमूला व्यञ्जनेति प्राञ्चः । सा यथा—

आशाधरहृदुत्पन्ना
विमला बुद्धिशुद्धिदा ।
कोविदानन्दसहजाऽ-
नुग्राह्यैषा त्रिवेणिका ॥ इति ॥

---

सा च व्यञ्जना च । मुख्यार्थेति । लक्षणायां यथा तथेति शेषः । चेति । इति द्विविधेत्यर्थः । दूरार्थबोधे परम्परया अर्थबोधे इत्यर्थः ॥

कोविदानन्दाख्यग्रन्थेन साकं लिखिता त्रिवेणिका इत्यर्थः, ग्रन्थपरत्वे । तीर्थपरत्वे तु–आशाधरो हिमालयः । तस्य हृदयादन्तरालात् उत्पन्ना । कोविदाः विद्वांसः ज्ञानिनः तदानन्दसहजा त्रिवेणिका

अत्र ग्रन्थपरत्वेन तीर्थपरत्वेन कन्यापरत्वेन च योजनया पक्षत्रयम् । तत्र ग्रन्थतीर्थयोरभेदोपचारात् प्रकृतश्लेषः । तत्र सादृश्यमात्रं व्यञ्जनागम्यम् । कन्यापक्षस्तु व्यञ्जनागम्य एव । तत्र येषां शब्दानां विनिमयः कर्तुं न शक्यते तदाश्रया व्यञ्जना ॥

शब्दावयवाश्रया व्यञ्जना

शब्दावयवाश्रयाऽपि सा दृश्यते । यथा—

दानी पानी तथा ज्ञानी
ध्यानी मानी निधान्यपि ।
राजा मयूर चित्रोऽयं
येन राजन्वती क्षितिः ॥ इति ॥

---

गङ्गायमुनासरस्वतीनदीनां सङ्गमात्मिका इति । कन्यापरत्वे-कोविदानन्दनामा पुत्रः त्रिवेणिकानाम्नी पुत्री इति अर्थभेदः । गम्यः इति । इयं च शाब्दी व्यञ्जना । अर्थभेदेऽपि शब्दानां परिवर्तनसहत्वाभावात् । विनिमयः=परिवर्तना ॥

सा व्यञ्जना । दानी-दानशीलः, पानी मद्यपानशीलः, ज्ञानी=अतिशयितज्ञानसम्पन्नः । निधानी=निधिसम्पन्नः । राजन्वतीति । राजन्वान् सौराज्ये । राजन्वती भूः । राजवानन्यत्र । "सुराज्ञि देशे राजन्वान् ततोऽन्यत्र राजवान्" इत्यमरः ॥

दानी बहुप्रदः। पानी मद्यपः। ज्ञानी सुज्ञः। ध्यानी नित्यध्याननिष्ठः। मानी अतिशयमानः। निधानी निधिसम्पन्नः। अत्र—

" भूमनिन्दाप्रशंसासु
नित्ययोगेऽतिशायने।
संसर्गेऽस्तिविवक्षायां
भवन्ति मतुबादयः "॥

इति वार्तिकोक्त्या भूमनिन्दयोरर्थाः व्यञ्जनागम्याः, तद्धितद्योत्यत्वात्। द्योत्यार्थस्य काव्यप्रकाशे व्यङ्ग्यत्वस्वीकारेण तद्वतो ध्वनित्वमुदाहृतम्। द्योत्यार्थे हि संकेताभावान्न शक्तिः। शक्यार्थबोधानन्तरं तद्बोधाच्च। शब्दबुद्धिकर्मणां विरम्यव्यापाराभावात्। नापि लक्षणा। प्रत्य-

---

दानीति। बहुदानमस्यास्तीति विग्रहः। पानीति। निन्द्यं पानं अस्यास्तीति विग्रहः। ज्ञानीति। प्रशस्तं ज्ञानं अस्यास्तीति विग्रहः॥

ध्वनित्वं = ध्वनिकाव्यत्वम्। द्योत्यार्थे—प्रस्तुतप्रतीयमानार्थे। सङ्केताभावात् मतुबादीनामिति शेषः। शक्तिः अभिधाव्यापारः। विरम्येति। अभिधाव्यापारेण सकृत् एकमर्थं बोधयित्वा पुनः तेनैव व्यापारेण अर्थान्तरबोधकरणासंभवादित्यर्थः। वृत्तौ = पूर्वोक्तकृत्तद्धितादिवृत्तौ॥

यमुख्यार्थबाधाभावात्तत्सम्बन्धाभावाच्च । 'राजन्वती' इत्यत्रापि राजपदं शोभनराज्ञि लाक्षणिकमिति न भ्रमितव्यम् । 'वृत्तौ लक्षणा नास्ती'ति सिद्धान्तात् । तत्र नकारोच्चारणेन शोभनत्वं व्यज्यते इति प्रकृत्याश्रया व्यञ्जनैवेति दिक् ॥

अर्थाश्रया उभयाश्रया च व्यञ्जना

अर्थाश्रया उभयाश्रया च व्यञ्जना कोविदानन्दे द्रष्टव्या[1] ॥

लक्षणाश्रया व्यञ्जना

लक्षणाश्रया यथा—

कलत्रवानहं बाले !
कनीयांसं भजस्व मे ॥

इत्यत्र कलत्रशब्देन तत्सान्निध्ये लक्षणा, अन्यथा लक्ष्मणस्यापि तथात्वापत्तेः । 'बाले' इत्यनेन च भूरिकामत्वे लक्षणा ॥

---

अर्थाश्रया = आर्थी व्यञ्जना । बाले ! हे शूर्पणखे ! अहं भार्यावान् मम कनीयांसं लक्ष्मणं भजस्वेत्यर्थः । तत्सान्निध्ये सीतायाः सांनिध्ये । भार्या इदानीं मम संनिधावेव अस्तीति भावः । भूरिकामत्वे अतिशयितकामपरवशत्वे इत्यर्थः ॥

---

[1] कोविदानन्दे—3-7-8.

"बाला स्यात् षोडशाब्दा
तदुपरि तरुणी त्रिंशतो यावदूर्ध्वम्" ॥

इति रतिरहस्योक्तेः। ततश्चाऽहं भोगतृप्तत्वान्न त्वदभिगम्यः, अतो हि कामातुरायास्तव सन्तोषो न स्यादिति व्यज्यते। किञ्च स्वस्य कलत्रसान्निध्योक्त्या - एकपत्नीव्रतं गम्यते। तत्सन्निधौ दुष्टाचरणनिषेधात् सीतायाः स्वाधीनपतिकात्वं चेति। ततश्च कलत्रवानहं क्व? बाला त्वं क्व? इति विषमालङ्कारोऽपि गम्यः। 'कनीयांसम्' इति लक्ष्मणविशेषणादसन्निहितकलत्रः कनिष्ठश्च स बालायास्तवानुरूपः इति समालङ्कारोऽपि गम्यः। स्वस्य लक्ष्मणस्य च विषमालङ्कारोऽपि। यद्वा कलत्रशब्देन लावण्यादिगुणसम्पन्ने लक्षणा। तेन अतिश्यामया त्वया[1] मम किं प्रयोजनमिति व्यज्यते॥

---

विषमालङ्कारः इति। 'क्वचिद्यदतिवैधर्म्यात् न श्लेषो घटनामियात्। स एष विषमो मतः। इति लक्षणम्। विषमं वर्ण्यते यत्र घटनाऽननुरूपयोः' इति चन्द्रालोकः। सममिति। समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोः इति चन्द्रालोकः॥

---

[1] तेनसादृश्यत्वात् त्वया-क.

व्यञ्जनामूला व्यञ्जना

व्यञ्जनामूला व्यञ्जना यथा—

क्षीरत्यजं नीरपिबं च हंसं
व्यासं विरक्तं च शुकं गृहस्थम् ।
वदामि वाणी मम चेद्यथार्था
तदा सुधीभिर्मम धीर्न निन्द्या ॥

अत्र सुधीशब्देन परीक्षाकुशलत्वं व्यज्यते । सुधियो हि परीक्षामन्तरेण स्तुतिं निन्दां वा न कुर्वन्ति । परीक्षा हि हंसानां क्षीरेण सह परिचयाभावात्तद्ग्रहणपाटवं न स्यादेवेति युक्तिः । तत्सदृशानां ज्ञानिनां अपि स्थूलतया निन्द्यपरिणामतया आपातरमणीयतया च विषयसुखं हेयं भवति । सूक्ष्मतया निर्विकारतया सर्वकालरमणीयत्वेन च ब्रह्मसुखमुपादेयं भवतीति युक्तिः । लोकप्रसिद्धं तु न तथेति । किञ्च व्यासस्य पत्न्यश्रवणजादरण्ये पतिताच्छुक्राच्छुकीनामाऽप्सरोदर्शनक्षुभितात् पुत्रोत्पत्तिवर्णनात् ब्रह्मविद्या प्रवर्तकत्वाद्विरक्तत्वमध्यवसीयते । प्रसिद्धभारतकथा-

---

क्षीरत्यजमित्यद्यार्थः अग्रे स्फुटीभविष्यति । अतिश्यामयेति । 'श्यामा षोडशवार्षिकी' इति विश्वकोशः । अत्र तु अतिश्यामयेत्यनेन अतिमेचकस्वरूपिण्येति विवक्षितम् । भागवते इति । नवमस्कन्धे एकादशाध्याये इति भाव्यम् ॥

मनादृत्य पत्नीद्वारा पुत्रोत्पत्त्यादिकं न विरुद्धमेव। शुक्रस्य चापत्यपञ्चकवर्णनात् स्वरूपेण रूपान्तरेण वा गृहस्थत्वमिति बोध्यम्। तत्र हरिवंशे स्वरूपेण भागवते च "स कृत्व्यां शुककन्यायाम्" इति शुकोक्तौ मम कन्यायामिति च वक्तव्येऽपि शुकपदं रूपान्तरबोधनार्थमिति। एवं परीक्षिते युक्तिमूला शास्त्रमूला च मम वाणी सत्या भवति चेदेतदर्थविषया मम धीः स्तुत्यैव भवतीति सुधीशब्दे गम्योऽर्थः। ततश्चास्मिन् ग्रन्थे कोविदानन्दे च प्रसिद्धिविरुद्धं किञ्चिदस्ति चेत्परीक्ष्य स्तुत्यमेवेति प्रार्थना व्यज्यते॥

व्यञ्जनायाः अनुमितावन्तर्भाववादः

अत्र तार्किकाः—व्यङ्ग्यार्थो हि ज्ञापनेन हेतुना अनुमीयते, तदर्थं व्यञ्जना न स्वीकार्या; 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायादतिरिक्त वृत्तिस्वीकारे गौरवंचेत्याहुः॥

तत्खण्डनम्

तन्न—'साधुदूति! पुनः साधु' इत्यत्र काकु वक्रोक्तौ व्यतिरेकलक्षणामूलव्यञ्जनया 'मद्रम-

---

वृत्तिस्वीकारे—व्यञ्जनावृत्तिस्वीकारे इत्यर्थः। तस्य दन्तक्षतादिकामकेळीसिद्धस्य नखक्षतादेः। नियुद्धं बाहुयुद्धविशेषः॥

णेन सह विलसन्त्या त्वयाऽनुचितस्वार्थसाधनं कृतम्' इति व्यज्यते । तत्र दन्तैर्नखैश्च विलूनत्वं हेतुः । तस्य नियुद्धसाधारणत्वेन सव्यभिचारत्वात् नानुमानसिद्धिरिति व्यञ्जना स्वीकार्या । एवमन्यत्रापि द्रष्टव्यम् ॥

व्यञ्जनायाः शक्तिलक्षणयोरन्तर्भाववादः

अत्र वैयाकरणाः-शक्तिरेव शब्दवृत्तिः । तस्याश्च प्रसिद्ध्यप्रसिद्धिभ्यां शक्तिलक्षणाव्यपदेशः । व्यञ्जना तु तत्रान्तर्भवति, दीर्घव्यापारादित्याहुः ॥

तत्खण्डनम्

तन्न । 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति[1] स्वीकारात् । "सकृदुच्चरितः शब्दः

---

'साधु दूति ! पुनः साधु
कर्तव्यं किमतः परम् ?
यन्मदर्थे विलूनाऽसि
दन्तैरपि नखैरपि'

इति पूर्णः श्लोकः ॥

प्रसिद्धीति । तस्य शब्दस्य तस्मिन्नर्थे प्रसिद्धिसत्त्वे शक्तिरिति, प्रसिद्ध्यभावे च लक्षणेति च व्यवहारः इति भावः । वायुमित्रेति ।

---

[1] अयं भागः-घ पुस्तके नास्ति ।

सकृदेवार्थं गमयति" इति न्यायाद्वाच्यार्थबोधानन्तरं व्यङ्ग्यार्थे शक्तेरप्रवृत्तेः ॥

इन्द्रियाणां स्वविषये-
ष्वनादिर्योग्यता यथा ।
अनादिरर्थे शब्दानां
सम्बन्धो योग्यता तथा ॥

इति शक्तिलक्षणस्य व्यञ्जनायामप्रवृत्तेश्च । व्यञ्जनाया अनादित्वाभावात् काव्यस्य उत्तमादि भेदत्रयानुपपत्तेश्च । उत्तमकाव्यं हि व्यङ्ग्यप्रधानम् । तद्भिन्नं मध्यमम् । गोमूत्रिकादिशब्दचित्रं, वायुमित्रसुतबन्धुवाहनेत्याद्यर्थचित्रं चाधमम् । अनुप्रासोपमाद्यर्थचित्रं चमत्कारकारित्वात् क्वचिदुत्तमं क्वचिन्मध्यमं च । अधमं तु न काव्यतया गणनीयम् । यथाह ध्वनिकारः—

"प्रधानगुणभावाभ्यां
व्यङ्ग्यस्यैव व्यवस्थितेः ।
उभे काव्ये तदन्यद्यत्
तच्चित्रमभिधीयते" ॥ इति ॥

---

"वायुमित्रसुतबन्धुवाहनारातिभूषणशिरोम्बिलवनी । तज्जवैरभगिनीपतेः सखा पातु वः कमललोचनो हरिः" । इति पूर्णः श्लोकः ॥

प्रधानगुणभावाभ्यामिति । यथा—"नासुरोऽयं न वा नागः धरासंस्थो न राक्षसः । नासुखोऽयं न वा भोगः धरासंस्थो न राजसः" ।

निगमनम्

ततश्च सिद्धं व्यञ्जनायाः सफलत्वमिति
दिक् ॥

दोषपरित्यागेन सारग्रहणप्रार्थना

यदिह लिखतामव्युत्पत्त्या
पतेल्लघु दूषणम्
निपुणधिषणैरुज्झित्वा
तत्कृतिर्मम सेव्यताम् ।
सरसविमले वातक्षिप्तं
निवार्य तु शैवलं
सलिलममृतप्रायं
पिबन्ति पिपासवः ॥

---

इत्यादौ इति ज्ञेयम् ॥

व्यञ्जनायाः इति । पार्थक्येन वृत्तिविशेषतया स्वीकृतायाः इत्यर्थः । अन्यत् सर्वं यथापाठमेव सुगमम् । लिखतां = ग्रन्थप्रतिलिपीकरणं कुर्वतामित्यर्थः । अत्र "लिखतो मे" इत्येव पाठः सूक्तः । यदिहेत्यारभ्य आग्रन्थपरिसमाप्ति भागः—ग. पुस्तके नास्ति । परं तु दिक्पदानन्तरं "इति शब्दत्रिवेणिका समाप्ता" इति परिसमाप्तिवाक्यं दृश्यते । तस्मिन् पाठेऽपि प्रतिपाद्याश्च विषयाः-शब्दशक्तिः, शब्दभक्तिः, शब्दव्यक्तिश्चेति त्रयमेवेत्यतः शब्दत्रिवेणिकेति संज्ञाऽपि युज्यते एवेति भाव्यम् ।

लिखतामिति । प्रतिलिपिं कुर्वतामव्युत्पन्नानामित्यर्थः । तत् दूषणं

यदि मम सरस्वत्यां
कश्चित्कथञ्चन दूषणं
प्रलपति, ततः प्रौढप्रज्ञैः
स किं कविभिः समः ? ।
रघुपतिकुटुम्बिन्यां
सत्यामवद्यमुदाहरन्
हतकरजकः साम्यं लेभे
स किं सह राजभिः ? ।।

अस्याः प्रार्थनायाः प्रकृते उट्टङ्कनोद्देशः

प्रभापटले निबद्धमिदं हरिणीद्वयं तापापनोदाय त्रिवेणिकाप्रान्ते विन्यस्तम् । यथा रघुवंशस्थाः श्लोकाः स्वकृतत्वात् कुमारसम्भवेऽपि विन्यस्ताः

---

उज्झित्वा परिमार्ज्येत्यन्वयः । सरसविमले सरोवरे वातक्षिप्तं-मारुतेन संयोजितं शैवलं निवार्येत्यन्वयः । सरस्वत्यां-ग्रन्थरूपायां वाचि । रघुपतिकुटुम्बिन्यां = सीतायाम् । सत्यां = पतिव्रतायाम् । अवद्यं रावणगृहवासनिमित्तम् । हतकः हीनः ॥

प्रभापटलं नाम ग्रन्थः आशाधरकृतः । तत्रत्यं इदं हरिणीवृत्त-घटितं श्लोकद्वयम् । विन्यस्ताः इति । तथैवात्रापि स्वकृतग्रन्थान्तरीय

महाकविकालिदासेनेति ॥ इति ॥

इति श्री पदवाक्यप्रमाणपारावारपारीण
रामजीभट्टात्मजेनाशाधरभट्टेन
विरचितायां त्रिवेणिकायां
तृतीयं व्यञ्जनाप्रकरणं समाप्तम्
ग्रन्थश्च समाप्तः



एव श्लोकाः संयोजिताः इति भावः ॥

सेयमाशाधरी वृत्तित्रयनेत्री त्रिवेणिका ।
एवं वेङ्कटनाथार्यविदुषो मार्गदर्शने ॥
मुदा शिवकुमारेण कृतया च प्रभाख्यया ।
टिप्पण्या सहिता जीयादनया महिता हिता ॥

इति वेदान्तालङ्कारविदुषा शिवकुमारस्वामिना
सङ्कलिता प्रभानाम्नी
त्रिवेणिकाटिप्पणी समाप्ता

